श्रीव्यासतीर्थविरचितम्

# तर्कताण्डवम्

(श्रीराघवेन्द्रतीर्थविरचितन्यायदीपव्याख्यासहितम्)

तृतीयं सम्पुटम्

(अनुमानपरिच्छेदः)

सम्पादकः

कृ.त. पाण्डुरङ्गि

प्रकाशकाः

द्वैतवेदान्ताध्ययनसंशोधनप्रतिष्ठानम्, बेङ्गलूरु - ४.

श्रीव्यासतीर्थविरचितम्

# तर्कताण्डवम्

(श्रीराघवेन्द्रतीर्थविरचितन्यायदीपव्याख्यासहितम्)

**Śrī Vyāsatīrtha viracitam tarkatāṇḍavam**
**Śrī Rāghavendratīrtha viracita Nyāyadīpa Vyākhyayā**
**Śrī Vijayīndratīrtha kṛta tippaṇī sahitam**

## तृतीयं सम्पुटम्

(अनुमानपरिच्छेदः)


*Edited by*

**Mahāmahopādhyāya**

**Raṣṭrapatipraśastipuraskṛta, Darśanakalānidhi**

**Prof. K.T. Pandurangi**

former Professor of Sanskrit, Bangalore University

*Associate Editor*

**Dr. L.S. Vadirajacharya,** M.A., Ph.D.





*Published by*

**Dvaita Vedanta Studies and Research Foundation**

Bangalore

तर्कताण्डवम्

**Tarkatāṇḍava** of Śrī Vyāsatīrtha with the commentary Bhāvadīpa of Śrī Rāghavendratīrtha, Tippaṇi by Śrī Vijayīndratīrtha, Vol.III (Anumānapariccheda), edited by Prof. K.T. Pandurangi and published by Dvaita Vedanta Studies and Research Foundation, No.11, Uttarādimatha Compound, Basavanagudi, Bangalore-4.

No. of Pages : xvii+210

No. of Copies : 1000

Year of Publication : 2004

Price : Rs.200/-



*Copies can be had from :*
Dvaita Vedanta Studies and Research Foundation, No.11,
Uttarādimatha Compound, Basavanagudi, Bangalore-04.
Ph.: 26627272

Printed at : **Sabda Mudrana,** B'lore.

# Preface

Tarkatāṇḍava of Śrī Vyāsatīrtha is an important work of Indian epistemology. Two volumes of it are already published. The third volume deals with Anumāna Pramāṇa, particularly the defects of anumāna i.e. the hetvabhāsas are discussed in detail in this work. The views of tattvacintāmaṇi of Gangeśopādhyāyā, Udayana, Lilāvati and Bhāsarvajña are reviewed. The procedure of five steps in stating Parārthānumāna is not accepted. Each step is capable of conveying Parārthānumāna separately. All the hetvābhāsas are brought under only two (i) virodha and (ii) Asangati.

This work contributes original ideas in respect of anumānadoṣas and is a very useful work of Indian Epistemology.

It is hoped that the students, research scholars will benefit by the study of this work.

I record my appreciation of the help given to me by Prof. C. Ramanathan in editing this work.

**Prof. K.T. Pandurangi**
*Hon. Director*
Dvaita Vedanta Studies and
Research Foundation, B'lore

# Introduction

This volume contains अनुमान i.e. inference. The details of the topics connected with anumāna viz. (i) व्याप्ति, (ii) पक्षता (iii) उपाधि (iv) परामर्श (v) तर्क (vi) केवलान्वयि, केवलव्यतिरेकि, पञ्चावयवनियम (vii) अनुमानदोषs are discussed here.

In the course of discussing these topics and presenting the Dvaita view अनुव्याख्यान, न्यायसुधा, प्रमाणलक्षण, प्रमाणपद्धति are quoted in support of Dvaita View.

i) **व्याप्ति :** is defined as अविनाभाव, अविनाभावः व्याप्तिः । It is also explained as साहचर्यनियमः व्याप्तिः । साहचर्य here is not of the nature of सामानाधिकरण्य. It is of the nature of समुचितदेशकालसम्बन्ध. This explanation is intended to cover such instances as inferring by the flood of the river at the lower region, the heavy rain at the upper region. Inferring the rise of Rohiṇī nakṣatra by the rise of Krittikā nakṣatra.

ii) **पक्षता :** While discussing the nature of pakṣatā the explanation of Pakṣatā normally given as सन्दिग्धसाध्यधर्मा धर्मी पक्षः is rejected by pointing out that even when there is no सन्देह if the सामग्री of the अनुमिति are present then अनुमिति takes place.

असन्देहेऽपि सामग्रीबलात् अनुमितिदर्शनात् ।

Another definition of पक्षता, viz. सिषाधयिषा विरहसहकृतसिद्ध्यभावः यत्र स पक्षः is also rejected by pointing that even when there is सिद्धि in the absence of सिषाधयिषा also अनुमिति is found.

सत्यां सिद्धौ असत्यामपि सिषाधयिषायां अनुमितिदर्शनात् । In this context तर्कताण्डव remarks that अनुभवानुसारेण हि लक्षणं कल्प्यम्, न तु स्वकल्पितलक्षणार्थं अनुभवपीडा ।

iii) **उपाधिः :** उपाधि is defined as साध्यव्यापकत्वे सति साधनाव्यापत्वं उपाधिः ।

For instance in the syllogism पर्वतः धूमवान् वह्निमत्वात्, आर्द्रेन्धनसंयोग is उपाधि. In the instance वैधीहिंसाऽधर्मसाधनं हिंसात्वात्, निषिद्धत्व is उपाधि ।

उदयन defines उपाधि as साध्यसमव्याप्तत्वे सति साधनाव्यापकः उपाधिः । In अनुव्याख्यान साध्यव्यापकत्व is stated as उपाधि but not समव्याप्ति । अत एव अनुव्याख्याने साध्यव्यापकत्वमेव उक्तम् न तु समव्याप्तिः ।

In तत्त्वचिन्तामणि उपाधि is defined as पर्यवसितसाध्यव्यापकत्वे सति साधनाव्यापकः उपाधिः ।

iv) **उपाधेः दूषकताबीजम् ।**

उपाधि before अनुमान at the time of व्याप्तिग्रह points out अव्याप्ति.

उपाधिश्च अनुमानप्रवृत्तेः प्राक् व्याप्तिग्रहवेलायां अव्याप्तेः एव उन्नायकः ।

उपाधि, before विप्रतिपत्ति, points out अव्याप्ति but after it points out प्रतिपक्ष । In प्रमाणपद्धति also it is made clear that,

उपाधिः विप्रतिपत्तेः प्राक् अव्याप्तेरुन्नायकः ।
विप्रतिपत्त्युत्तरकालं प्रतिपक्षोन्नायकः भवतीत्युक्तम् ।

v) **तार्किकोक्ततृतीयज्ञाननियमभङ्गः ।**

This तृतीयज्ञान is called as लिङ्गपरामर्श. A person who has comprehended व्याप्ति of धूम and अग्नि in महानस will first have धूमज्ञान in पक्ष. Then he remembers व्याप्ति. Then he will have the comprehension of धूम qualified by व्याप्ति and पक्षधर्मता. This is not correct. This procedure works when व्याप्ति is remembered on seeing लिङ्ग. However in the case wherein without लिङ्गदर्शन by the statement of a reliable person व्याप्ति is remembered. लिङ्गदर्शन accompanied by व्याप्तिस्मृति gets the knowledge of लिङ्गपरामर्श । In this case there is no need of तृतीयज्ञान.

अत्र केचित् – धूमाग्न्योर्महानसादौ व्याप्तिं गृहीतवतः आदौ पक्षे धूमज्ञानम् । अथ व्याप्तिस्मरणम् । अनन्तरं अयं धूमः वह्निव्याप्य इति वह्निव्याप्यधूमवानयमिति वा व्याप्तिपक्ष

धर्मताविशिष्टधूमविषयकं प्रतिसन्धानात्मकं लिङ्गपरामर्शसंज्ञकं तृतीयं ज्ञानं तदेवानुमिति-जनकमित्यांहुः । तन्न । यत्र हि लिङ्गदर्शनादेव व्याप्तिस्मृतिः । तत्रेयं प्रक्रिया । यत्र तु लिङ्गदर्शनं विनैवादृष्टादिहेत्वन्तरेण आप्तवचनेन वा व्याप्तिस्मृतिस्तत्र द्वितीयमेव लिङ्गदर्शनं व्याप्तिस्मृतिसहितात्सन्निकर्षादेवोक्त प्रतिसन्धानात्मकमुदेष्यति । सोऽयमिति प्रत्यभिज्ञावत् इति किं तृतीयज्ञानेन ।

vi) **प्राभाकरोक्तज्ञानद्वयहेतुत्वभङ्गः**

Prabhākaras state that remembering the fact that धूम is वह्निव्याप्य and पर्वत has धूम these two cognitions lead to Anumiti. There is no प्रमाण to say that between these two cognitions and अनुमिति there is viśiṣṭajñāna. This is not correct. विशिष्टज्ञान is अनुभवसिद्ध । Therefore it can not be ignored by ज्ञानद्वय.

प्राभाकरास्तु – धूमो वह्निव्याप्य इति स्मृतिः पर्वतश्च धूमवान् इति ज्ञानद्वयमेवानुमितिहेतुः । ज्ञानद्वयानुमित्योर्मध्ये विशिष्टज्ञाने मानाभावात् ।

तन्न, प्रत्यभिज्ञावत् अनुमित्यादिवत् च अनुभवसिद्धस्य विशिष्टज्ञानस्य तद्धेतुभूतज्ञानद्वयेन अपलापे, In case विशिष्टज्ञान is ignored by the cognitions that lead to this विशिष्टज्ञान the following contingency will arise.

(i) व्याप्तिज्ञानस्य तद्धेतुभूतसहचारादिज्ञानेन । व्याप्तिज्ञान has to be ignored by its cause सहचारज्ञान.

(ii) त्वदुक्तज्ञानद्वयस्य च तत्कारणेनापलापप्रसङ्गात् । The two cognitions stated by you have to be ignored by their causes.

(ii) न खलु विशकलिते व्याप्तिस्मृतिपक्षधर्मताज्ञाने भावयतोऽनुमितिरिति । विशकलिते भिन्नविषये इत्यर्थः । Isolated व्याप्तिस्मृति and पक्षधर्मताज्ञान cannot lead to inference.

If Viśiṣṭajñāna is not accepted then व्याप्तिज्ञान cannot be करण as it has no व्यापार. पक्षधर्मताज्ञान cannot be व्यापार as it is not produced by व्याप्तिज्ञान.

vii) **लिङ्गपरामर्शस्य करणत्वम् ।**

Cognition of Liṅga is Karaṇa but not mere लिङ्ग. This is stated in Nyāyasudhā. न धूमादिकं एव अनुमानम्. किन्तु तज्ज्ञानमिति ।

viii) **तर्कस्य अनुमानान्तर्भावः ।**

'Anumāna is of two types : (i) साधनानुमान (ii) दूषणानुमान.

पर्वतः अग्निमान् धूमवत्वात् is an example of साधनानुमान । दूषणानुमान is of two types (i) दुष्टत्वप्रमितिसाधनम् (ii) तर्कः ।

The example for तर्क is यदि पर्वतः निरग्निकः स्यात् तर्हि निर्धूमः स्यात् । This is दूषणानुमान on the ground that it opposes निरग्निकत्व ।

द्वितीयं, यदि निरग्निकः स्यात् तर्हि निर्धूमः स्यादित्यादि । अस्य दूषणानुमानत्वं च परोक्तनिरग्निकत्वादिप्रतिक्षेपरूपत्वात् ।

Some state that तर्क is of the nature of व्यापकारोप by व्याप्यारोप. It is only प्रमाणानुग्राहक but not a Prāmāṇa by itself. Others say that तर्क is of the nature of व्यापकप्रसञ्जन by व्याप्यारोप. This is alto not correct as it results in आत्माश्रय.

(i) तत्र केचित् – व्याप्यारोपेण व्यापकारोपः तर्कः । स च प्रमाणानुग्राहक एव । न तु प्रमाणमित्याहुः । तन्न ।

(ii) नापि व्याप्यारोपे व्यापकप्रसञ्जनं तर्कः । प्रसञ्जनस्य तर्कत्वे आत्माश्रयत्वात् ।

तर्क is a type of अनुमान because it communicates by using व्याप्ति. In प्रमाणपद्धति it is stated that तर्क is of the nature of अर्थान्तरापादन. In प्रमाणलक्षणटीका also it is stated that accepting व्याप्य leads to the contingency of अनिष्टव्यापक.

(i) पद्धतौ कस्यचिदर्थस्याङ्गीकारे अर्थान्तरापादनं तर्क इति ।

(ii) प्रमाणलक्षणटीकायां च व्याप्याङ्गीकारे अनिष्टव्यापकप्रसञ्जनं तर्क इत्युक्तम् ।

आपादनं हि अङ्गीकर्तव्यतया ज्ञापनम्, न पुनः सद्भावस्य प्रतिपादनम् ।

तर्करूपज्ञान is not संशयरूप as there are no two sides nor it is विपर्यय.

किंच तर्करूपं हि ज्ञानं न तावत्संशयः ।

नापि विपर्ययः निरस्तत्वात् तस्मात् तर्कः प्रमाणम् एव ।

Tarka is अनुमान as it utilises व्याप्ति. It cannot be considered as शब्दप्रमाण or प्रत्यक्षप्रमाण । तत्मात्तर्कः प्रमाणमेव । तथापि व्याप्तिसापेक्षत्वेन शाब्दत्वप्रत्यक्षत्वयोरसम्भवेन परिशेषादनुमानमेव ।

ix) **केवलव्यतिरेकिभङ्गः**– Tarkatāṇḍava rejects केवलव्यतिरेकि अनुमान – साध्यप्रसिद्धि is necessary for the position that Viśiṣṭa is विशेषणज्ञानपूर्वकम् but in the case of केवलव्यतिरेकि there is no साध्यप्रसिद्धि ।

केवलव्यतिरेक्यनुमानं च न युक्तम् । त्वन्मते व्याप्तिग्रहार्थं प्रतिज्ञावाक्यस्याबोधकत्वपरिहारार्थं च विशिष्टज्ञानं विशेषणज्ञानपूर्वकमिति नियमार्थं साध्यप्रसिद्धेरावश्यकत्वात् । केवलव्यतिरेकिणि च तस्या अभावात् ।

व्यतिरेकव्याप्ति is based on abhāva. Hence it cannot establish भाव. तस्मान्न व्यतिरेक्यनुमानं युक्तम् । किञ्च अभावगतया व्यतिरेकव्याप्त्या कथं भावस्य गमकत्वम् ।

x) **पञ्चावयव नियम भङ्गः** – अनुमान is of two types. (i) स्वार्थ (ii) परार्थ. That which does not require instructions from others is स्वार्थ । But that which requires instruction from others is परार्थ. This instruction from others is stated in ten steps by old Naiyayikas. It is stated in five steps by new Naiyāyikas. However Mīmāmsakas arrange it in three steps viz. प्रतिज्ञा, हेतु and उदाहरण, or उदाहरण, उपनय, निगमन. Buddhists say that it can be managed by two steps, viz. उदाहरण and उपनय.

पुनरप्यनुमानं द्विविधम् । स्वार्थं परार्थं च । तत्र परोपदेशानपेक्षं स्वार्थम् । तत्सापेक्षं परार्थम् । ससामर्थ्यलिङ्गप्रतिपादकवाक्यात्मकः परोपदेशोऽपि परार्थानुमानमिति उपचर्यत इति स्थिते तस्य

परोपदेशस्य जिज्ञासासंशयशक्यप्राप्तिप्रयोजनसंशयनिरासप्रतिज्ञाहेतूदाहरणोपनयानीति दशावयवा इति जरन्नैयायिकः । प्रतिज्ञादयः पञ्च इति नवीनाः । प्रतिज्ञादयः उदाहरणादयः वा त्रयः इति मीमांसकाः । उदाहरणोपनयौ द्वावेवेति सौगताः ।

This is not correct. First five are not of the nature of Śabda. Hence they can not be parts of statement. In respect of other steps there is no reason to envisage these steps.

तन्न । आद्यपञ्चकस्याशब्दात्मकतया वाक्यावयवत्वस्यैव अभावात् उक्तनियमेषु हेत्वाभावाच्च ।

i) By stating प्रतिज्ञा, हेतु, उदाहरण the purpose of परोपदेश is served.

ii) By stating प्रतिज्ञाहेतु only, the purpose is served.

iii) By stating हेतु only, the purpose is served.

iv) By stating दृष्टान्त with हेतु the purpose is served.

v) By stating उपनय the purpose is served.

vi) By stating निगमन only the purpose is served. Hence the statement of all the five steps is not necessary.

i) सा च पर्वतोऽग्निमान्धूमवत्त्वान्महानसवदिति प्रतिज्ञाहेतूदाहरण एकदेशदृष्टान्तवचनमात्रेण (ii) अग्निव्याप्तधूमवत्पर्वतोऽग्निमानिति हेतुगर्भप्रतिज्ञामात्रेण वा (iii) विवादेनैव प्रतिज्ञासिद्धौ कुतः पर्वतोऽग्निमानिति प्रश्ने अग्निव्याप्यधूमवत्त्वादिति हेतुमात्रेण वा (iv) पर्वतस्य अग्निमत्त्वे किं प्रमाणमिति प्रश्ने अग्निव्याप्तधूमवत्त्वं इति लिङ्गोक्तिमात्रेण वा (v) धूमवान् महानसवत् पर्वतोऽग्निमानिति सप्रतिज्ञेन हेतुगर्भेण दृष्टान्तवचनमात्रेण वा (vi) अग्निना व्याप्तो धूमः पर्वतेऽस्ति इत्युपनयमात्रेण वा (vii) व्याप्तिमद्धूमवत्त्वात् पर्वतो वह्निमान् इति निगमनमात्रेण वा (viii) जायमाना अनुभूयते इति किं पञ्चावयवादिति नियमेन ।

In ब्रह्मतर्क it is clearly stated

पृथक् प्रमाणत्वं याति युक्तितयैवतत् ।
तस्मात् पञ्चावयव नियमो न युक्तः ।

xi) **स्वाभिमतानुमानदोषः** । अनुमानदोष is that by the presence of which

लिङ्ग will not able to generate valid cognition. The inability to generate valid cognition is a common feature of doubt, wrong knowledge and the very inability to generate knowledge.

Anumiti doṣa is of three types viz., प्रतिज्ञादोष, हेतुदोष and दृष्टान्तदोष. If प्रतिज्ञा is प्रमाणविरुद्ध then it is प्रतिज्ञादोष. This is of two types : बलवत्प्रमाणविरोध, समबलप्रमाणविरोध. These two are again of three types : प्रत्यक्षविरोध, अनुमानविरोध, आगमविरोध.

अनुमानविरोध is of two types (i) by the very hetu which is proposed for establishing अनुमान (ii) by another hetu.

यत्सद्भावे लिङ्गाभिमतं प्रमां न जनयति सोऽनुमानदोषः । प्रमाजनकत्वाभावश्च संशय-विपर्ययजनके ज्ञानाजनके चानुगतः । स च त्रिविधः प्रतिज्ञा हेतुदृष्टान्तभेदेन । तत्र प्रतिज्ञातार्थस्य प्रमाणविरोधः प्रतिज्ञादोषः । स द्विविधः । बलवत्प्रमाणविरोधः समबलप्रमाणविरोधश्चेति । द्वयमपि पुनस्त्रिविधम् । प्रत्यक्षानुमानागमविरोधभेदात् । अनुमानविरोधोऽपि द्विविधः । तेनैव हेतुना हेत्वन्तरेण चेति ।

The inability to give the knowledge of साध्य is हेतुदोष. It is of two types, असिद्धि and अव्याप्ति. The absence of hetu in the proper place is असिद्धि । The absence of Vyāpti is अव्याप्ति ।

The inability of comprehending Vyāpti is दृष्टान्तदोष. This is of two types (i) साध्यवैकल्य, (ii) साधनवैकल्य.

हेतोः साध्यप्रमाजननसामर्थ्याभावः हेतुदोषः । स द्विविधः असिद्धिरव्याप्तिश्चेति । समुचितदेशे हेतोः अभावोऽसिद्धिः ।

व्याप्तिग्रहणानानुकूल्यं दृष्टान्तदोषः । स द्विविधः । साध्यवैकल्यं साधनवैकल्यं च ।

सव्यभिचार, विरुद्ध and व्याप्यत्वासिद्ध are included under अव्याप्ति. बाध and प्रतिरोध are not हेतुदोषs. अनुकूलतर्काभाव and प्रतिकूलतर्क are included under अव्याप्ति. उपाधि is included under सप्रतिपक्ष and अव्याप्ति ।

In view of this असिद्धि and अव्याप्ति are the only two हेतुदोषs.

पराभिमताः सव्यभिचारविरुद्धव्याप्यत्वासिद्धयः अव्याप्तौ अन्तर्भूता इति । बाधप्रतिरोधौ तु हेतुदोषौ एव नेति । परार्थानुमाने चासङ्गतौ अन्तर्भावात् । अनुकूलतर्काभावस्य प्रतिकूलतर्कस्य च अव्याप्तौ अन्तर्भावात् । उपाधेरपि सत्प्रतिपक्षे व्याप्तौ च अन्तर्भावस्य उक्तत्वात् । तस्मात् असिद्धिः अव्याप्तिश्चेति द्वावेव हेतुदोषौ ।

When there is a साध्याभावप्रमिति whether हेतु is प्रमित or अप्रमित, in the first case there is प्रतीत्यसिद्धि. In the second case व्यभिचार is comprehended in the very पक्ष. In view of this it is व्यभिचारदोषदुष्ट and there is no example for असङ्कीर्णोदाहरण. Hence thinking of बाध and प्रतिरोध as दोष will not serve any purpose. This is replied by pointing out that असिद्धि of प्रमिति prevents अनुमिति by करणसामर्थ्यविघटन. This is presented by हेतुवचन. In the case of बाध it directly opposes अनुमिति. It is presented by प्रतिज्ञा.

**xiii) अथ स्वमते बाधादेर्व्यभिचाराद्यसंकरः ।**

ननु पक्षे साध्याभावप्रमितिदशायां हेतुः अप्रमितः प्रमितो वा । आद्ये प्रमित्यसिद्धिः । द्वितीये पक्षे एव व्यभिचारो ज्ञात इति क्लृप्तेन व्यभिचारादिनैव दुष्टत्वेन असङ्कीर्णोदाहरणाभावात् किं बाधप्रतिरोधयोः दोषत्वकल्पनया इति चेन्न । पक्षद्वयेऽपि दोषाभावात् । तथा हि आद्यः तावदस्तु । प्रमित्यसिद्धिर्हि करणसामर्थ्यविघटनद्वाराऽनुमितिप्रतिबन्धिका । हेतुवचनाधीनोपस्थितिका च । बाधादिस्तु साक्षात् प्रतिबन्धकः । प्रतिज्ञाधीनोपस्थितिकश्च ।

बाध is common with प्रत्यक्ष etc. हेत्वाभास is a distinct defect. Further हेत्वाभास obstructs व्याप्ति and पक्षधर्मता. बाध and प्रतिरोध are प्रमेयदोषs. These directly prevent अनुमिति. These become known after प्रतिज्ञा and before हेतु. These break the capacity of करण. Therefore these two are not हेतुदोषs but these are प्रतिज्ञादोषs.

xiv) **बाधादेः व्यभिचारासङ्करः ।**

किञ्च यः करणसामर्थ्यरूपव्याप्तिपक्षधर्मत्वान्यतरविघटनरूपः स एव हेत्वाभासः । बाधादिस्तु न तथा करणासंस्पर्शित्वात् ।

तस्माद् बाधप्रतिरोधौ साधनाहेतुत्वरूपप्रमेयदोषत्वात्, साक्षादेवानुमितिप्रतिबन्धकत्वात् प्रतिज्ञानन्तरे हेतूपस्थितेः प्रागेव प्रतिभासात्, प्रत्यक्षशब्दसाधारण्यात्, करणसामर्थ्यविघटनत्वात् च न हेतुदोषौ । किन्तु प्रतिज्ञादोषाविति ।

xv) **साध्यसाधनवैकल्ययोः दृष्टान्तदोषत्वसमर्थनम् ।**

साध्यवैकल्य is दृष्टान्ताश्रित. Therefore it has to be presented in that way.

साध्यवैकल्यादेः दृष्टान्ताश्रिततयैव प्रतिभासात् । प्रतिभासानुसारेण उद्भाव्यत्वात् । उद्भाव्यस्य चैव व्युत्पाद्यत्वात् ।

In the case of धूमानुमान when ह्रद is mentioned as दृष्टान्त there is no हेतुदोष but there is दृष्टान्तदोष. Hence दृष्टान्तदोष is a distinct defect.

धूमानुमानेऽपि ह्रदे दृष्टान्तिते हेतुदोषाभावेऽपि दृष्टान्तो दुष्ट इति तद्दोषः पृथगेव ।

हेतुदोष and दृष्टान्तदोष together are not distinct दोषs. Hence by pointing out one दोष, दुष्टत्व is proved and to mention another दोष is superfluous.

उभयवैकल्यं तु न पृथग्दोषः । एकवैकल्येनैव दुष्टत्वसिद्धेः इतरवैकल्यस्य वैयर्थ्यात् ।

xvi) **अथाश्रयासिद्धेः दोषत्वभङ्गः ।**

In this context three types of (धर्म) attributes are described viz. (i) the (Dharmas) attributes that are आश्रित. In somthing such as sun's colour etc. are आश्रित in the objects that have colour. (ii) Some attributes (dharmas) are आश्रित in something indicates something else viz. ज्ञान etc. are आत्माश्रित but indicates घट etc. objects (iii) some attributes (dharmas) are not आश्रित in any thing viz. असत्त्व.

किञ्च असदाश्रयस्य साधकत्वं नेत्यपि केनचित् लिङ्गेन साधनीयम् । तत्र चासन्नाश्रयः एवं वत्वादित्यसत् वा पक्षीकर्तव्यः, असदाश्रयो हेतुर्न साध्यसाधकः एवंवत्वादित्यसदाश्रयो हेतुर्वा उभयथापि सहेतुरसदाश्रयः एव । असति सद्धर्मानङ्गीकारात् । तच्च लिङ्गं व्याप्त्यभावे असाधकत्वसाधकं न स्यादिति कथमसदाश्रयधर्मयोर्व्याप्त्यभावः ।

तदुक्तं भगवत्पादैः । 'असदाश्रयस्य साधकत्वं नेत्यपि व्याप्तिं विना कथं ईर्यते' इति ।

तस्माद्दोषात्परासङ्कीर्णोदाहरणाभावान् निधेयं प्रति पक्षत्वस्य च प्रतीतिमात्रेणोपपत्तेः नाश्रयासिद्धिर्दोष इति ।

तदुक्तं भगवत्पादैः । असत्यपि व्याप्तिरस्त्येव इति । पक्षेऽसत्यपि अविनाभावरूपा व्याप्तिः अस्त्येव ।

There is the experience such as शशशृङ्ग is असत्. Here असत्त्व is not आश्रित in शशशृङ्ग etc. The fact that असदाश्रय is not साधक has to be proved by some हेतु. (i) Here in the syllogism असन्नाश्रयः असत् has to be taken as पक्ष. (ii) हेतु that is असदाश्रय is not साध्यसाधक.

असदाश्रयहेतु has to be taken. In both these cases असदाश्रय has to be accepted. It is stated by श्री आनन्दतीर्थ that असदाश्रये साधकत्वं.

There is no साधकत्व for असदाश्रयत्व can be proved by only Vyāpti.

Even असत् has व्याप्ति ।

विचित्रा हि धर्माः । केचिदाश्रिताः । यथा रूपादयः । केचिदन्याश्रिताः अन्योपरञ्जकाः । यथा ज्ञानादयो घटादीनाम् । केचिदनाश्रिताः । यथा असत्त्वादयः शशशृङ्गमसदित्यबाधितप्रतीतेः । अन्यथा तस्य असत्त्वासिद्धेः ।

xvii) **अप्रसिद्धविशेषणस्य दोषत्वभङ्गः ।**

साध्याप्रसिद्धि is not a defect. If its दोषत्व due to (i) अतिप्रसङ्ग (ii) अप्रसिद्धि or साध्यकोटि (iii) पक्षधर्मताविघटन (iv) व्याप्तिविघटन or (v) non comprehension of प्रतिज्ञावाक्य or (vi) विशिष्टज्ञानायोग or कार्य on account of विशेषणज्ञान अभाव of कारण.

एवं साध्याप्रसिद्धिरपि न दोषः, तथा हि– तस्याः दोषत्वं (i) किमतिप्रसङ्गात् (ii) साध्यकोटेरप्रसिद्ध्या सन्देहाभावेन तद्घटितपक्षधर्मताविघटनाद्वा (iii) व्याप्तिविघटनाद्वा (iv) प्रतिज्ञावाक्यस्याविदितपदार्थकत्वेनाबोधकत्वप्रसङ्गाद्वा (v) कारणस्य विशेषज्ञानाभावे कार्यस्य विशिष्टज्ञानस्य अयोगाद्वा ।

All the above ground to establish दोषत्व of साध्याप्रसिद्धि are rejected in detail.

This discussion is concluded with the observation of Śrī Ānandatīrtha. Even if there is no साध्यप्रसिद्धि there is व्याप्ति.

तदुक्तं भगवत्पादैः असत्यपि व्याप्तिरस्त्येवेति । साध्यस्य प्रसिद्धत्वेऽसत्यपि साध्यं विनाऽनुपपत्तिरूपा वा, नियतसामानाधिकरण्यं व्याप्तिरिति पक्षेऽपि सामान्यतोऽन्वयव्याप्तिर्वा व्यतिरेकव्याप्त्यनुमिता विशिष्टान्वयव्याप्तिर्वा उक्तरीत्याऽस्त्येवेत्यर्थः ।

xviii) **व्यधिकरणासिद्धेः दोषत्वभङ्गः ।**

व्यधिकरणासिद्धि is also not a दोष. Its दोषत्व is claimed on (i) अतिप्रसङ्ग (ii) पक्षधर्मताविघटन (iii) व्याप्तिविघटन. All these claims are rejected. When there is व्याप्ति, if there is व्यधिकरणत्व, claiming it as दोष is not proper. There are a number of examples which prove this.

किञ्च सत्यां व्याप्तौ व्यधिकरणत्वस्य दोषत्व एवातिप्रसङ्गः । दृश्यते हि व्यधिकरणेनापि पद्मविकासेन सूर्योदयस्य । समुद्रवृद्ध्या चन्द्रोदयस्य, छायया मेघस्य, भूमिष्ठेन आलोकेन उपरि सवितुः, चक्रभ्रमेण कुलालासत्तेः, कृत्तिकोदयेन रोहिण्युदयासत्तेः, अधोदेशे नदीपूरेण ऊर्ध्वदेशे वृष्टेः, ऊर्ध्वभागस्थधूमेन वह्नेश्चानुमितिः ।

पूर्वपक्षिन् argues that सामानाधिकरण्य can be obtained on the basis of काल, देश etc. He proposes syllogisms in this respect.

नन्वत्राप्ययं कालः सूर्योदयवान् (i) पद्मविकासवत् कालत्वात्सम्मतवत् (ii) अयं प्रदेशः कुलालासत्तिमान् भ्रमच्चक्राधिकरणत्वात् सम्मतवत् (iii) इयं नदी वृद्धिमती ऊर्ध्वदेशे सम्बद्धा पूर्ववदधोदेशेन सम्बद्धत्वात् सम्मतवत् (iv) अयं धूमो मूले अग्निमान् धूमवत्त्वात् सम्मतवत् इति कालदेशादिकं वा पक्षीकृत्य सामानाधिकरण्यं संपाद्यमिति ।

This explanation is not acceptable, either on the basis of लौकिक-प्रतीति or for managing सामानाधिरण्य ।

किमियं लौकिकप्रतीतिः उत त्वदभिमतसामानाधिकरण्यनियमनिर्वाहाय एवं प्रयोगविपरिणामः कल्प्यते ।

xix) **बाधप्रतिरोधयोः प्रतिज्ञार्थप्रमाणविरोधत्वेनैक्यम् ।**

In Gautamasūtra सव्यभिचार, विरुद्ध, प्रकरणसम, साध्यसम and अतीतकाल are treated as हेत्वाभासs.

तदुक्तं गौतमेन, सव्यभिचार-विरुद्ध-प्रकरणसम-साध्यसम-अतीतकालाः हेत्वाभासाः इति ।

(i) **सव्यभिचार**–साध्यतदभावकोटिद्वयोपस्थापकरूपवत्त्वं सव्यभिचारत्वम् । Presenting साध्य and also its absence is सव्यभिचार.

विरुद्ध– (ii) विपक्षमात्रवृत्तित्वं विरुद्धत्वम् ।

Being present in विपक्ष only is विरुद्ध.

(iii) **सत्प्रतिपक्ष** – समबलप्रमाणप्रतिरुद्धत्वं सत्प्रतिपक्षत्वम् । Being opposed by another equal pramāṇa is सत्प्रतिपक्ष.

(iv) **असिद्ध**–परामर्श विषयाभाववत्वमसिद्धत्वम् । Absence of परामर्शविषय is असिद्ध ।

(v) **बाधः**– प्रबलप्रमाणविरुद्धत्वं बाधः ।

Being opposed by stronger प्रमाण is बाध.

असाधारणं, अनुपसंहारी, सत्प्रतिपक्ष are अनित्यदोषs. Others are नित्यदोषs. In हेत्वाभास many subdivisions are possible. Therefore, it is not possible to explain very subtle हेत्वाभासs.

सम्भवन्ति हि हेत्वाभासेऽनन्ताः प्रकाराः । उक्तं हि न्यायसारे । 'यद्यपि चैषां सूक्ष्मो भेदोऽनन्तत्वाद्वक्तुं न शक्यते ।

xx) **गौतमोक्तहेत्वाभासपञ्चत्वभङ्गः**

The असाधकता of हेतुदोषs is on the basis of its अव्याप्तित्व which is common to व्यभिचार, विरुद्ध, व्याप्यत्वासिद्ध and व्याप्यत्वसिद्ध but not on the basis of सव्यभिचारत्व etc.

एवं हेतुदोषेऽप्यसाधकतालिङ्गत्वं व्यभिचारविरुद्धव्याप्यत्वासिद्धानुगतेनाव्याप्तित्वेनैव । न तु गौतमोक्तेन सव्यभिचारत्वादिना ।

असाधारण, अनुपसंहारी and विरुद्ध also could be included under अव्याप्ति.

साधारण, असाधारण, अनुपसंहारी and विरुद्ध have to be included under अव्याप्ति. अव्याप्तित्व of साधारण and विरुद्ध is definite and in the case असाधारण and अनुपसंहारी it is सन्दिग्ध ।

तस्मात्साधारणासाधारणानुपसंहारविरुद्धानां साध्याभावसम्बन्धरूपायां, अन्यथोपपत्तिरूपायां वा, अव्याप्तौ एव अन्तर्भावः । तत्रापि साधारणविरुद्धयोः व्याप्त्यभावः निश्चितः असाधारणानुपसंहारिणस्तु सन्दिग्ध इति ज्ञेयम् ।

**अथ परमते बाधस्य व्यभिचारसङ्करः ।**

If there is बाध there is also व्यभिचार.

किञ्चास्ति बाधोऽत्र चेद्व्यभिचारोऽप्यस्त्येव । बाधितसाध्यके हेतुवृत्तेरेव व्यभिचारत्वात् ।

In view of this it is not correct to say that there is no व्यभिचारसङ्कर in the opinion of others. In our opinion since बाध is प्रतिज्ञादोष there is no room for व्यभिचारशङ्का ।

तस्मात्परमते बाधस्य व्यभिचारसङ्करो न युक्तः । अस्मन्मते तु बाधस्य प्रतिज्ञादोषत्वेन व्यभिचारशङ्कैव नास्तीति प्रागेवोक्तम् ।

The view of Udayana that there is no (saṅkara) सङ्कर of hetvabhāsas and the view of lilāvati, there are only four hetvābhāsas reviewed.

Concluding the discussion तर्कताण्डव states that many हेत्वाभासs are stated by others and these are explained in different ways but these are not of the nature of पक्षधर्मताविघटन or व्याप्तिविघटन. The हेतुs that have व्याप्ति and पक्षधर्मता can not have हेत्वाभास.

(i) अयमत्र निष्कृष्टोऽर्थः । मदुक्तासिद्ध्यव्याप्तिव्यतिरिक्ताः हेत्वाभासाः बहुभिः बहुसङ्ख्याकाः कल्प्यन्ताम् । बहुधा न निरुच्यन्ताम् । तथापि ते सर्वे न तावत्पक्षधर्मताविघटनरूपाः नापि व्याप्तिविघटनरूपाः ।

व्याप्तिपक्षधर्मतायुक्तहेतोः आभासत्त्वायोगात् ।

ii) नापि कर्णविघटनेन– तथात्वे व्याप्तिपक्षधर्मतान्यतरविघटनस्यावश्यकत्वेन अव्यास्यसिद्धि अन्यतरान्तर्भावस्य दुर्वारत्वात् ।

एतदेवाभिप्रेत्योक्तं प्रमाणलक्षणे – असिद्धिरव्याप्तिश्च हेतुविरोधे इति ।

**Prof. K.T. Pandurangi**

# तर्कताण्डवम्

## तृतीयपरिच्छेदः

॥ श्रीमद्धनुमद्भीममध्वान्तर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवाय नमः ॥

## व्याप्तिवादः ॥ १ ॥

### अथ स्वमते व्याप्तिनिरूपणम् ॥ १ ॥

अथ ''तन्मुख्यं ज्ञानशब्दयो''रित्यनुप्रमाणेषु वेदरूपशब्दः प्रधानमित्युक्त्वा-त्तदनुग्राहकमनुमानमुच्यते ॥

निर्दोषोपपत्तिरनुमानम् । उपपत्तिर्व्याप्यम् । निर्दोषत्वेन विशेषणान्ना-सिद्धादावति व्याप्तिः । उक्तं हि पद्धतौ 'उपपत्तिर्युक्तिर्लिङ्गं व्याप्यमिति पर्याय'' इति । अत्रोपपत्तिर्व्याप्यमित्येतावतैव पूर्तावपि युक्तिलिङ्गग्रहणं भगवत्पादैः, ''अनुमा युक्तिरेवोक्ते''ति ''लिङ्गं हेतुरि''ति चोक्तत्वेन तद्विरोध इति शङ्कानिरासाय । प्रमाणलक्षणटीकायान्तु— ''साहचर्येणार्थगमकं लिङ्गमि''ति साहचर्यनियमरूप-व्याप्तौ नियमांशत्यागेन साहचर्यमात्रमुक्तम् । तदावश्यकनिर्दोषग्रहणादेव साधारणादौ नातिव्याप्तिरित्यभिप्रेत्य ॥

अविनाभावो व्याप्तिः ॥

नन्वविनाभावः, साध्येन विना साधनस्याभावो वा, साध्येनाविना साध्यसाहित्येन साधनस्य भावो वा । नाद्यः । केवलान्वयिनि साध्या(द्य)-प्रसिद्ध्याऽव्याप्तेः । अस्य व्यतिरेकव्याप्तित्वेन त्वन्मतेऽनुमानानङ्गत्वाच्च । न द्वितीयः । साध्यसाहित्यस्य व्यभिचारिण्यपि सत्त्वात् । साध्यसाहित्यनियमोऽभि-प्रेतश्चेत् नियमस्य निरुच्यमानव्याप्तिरूपत्वेनात्माश्रयात् । अधोदेशनदीपूरोर्ध्वदेश-वृष्ट्योर्देशतः कालतो वा साहित्यासंभवाच्च । एतेन साहचर्यनियमो वाऽनौपाधिक-

सम्बन्धो वा स्वाभाविकसम्बन्धो वा साध्याभाववदवृत्तित्वं वा व्याप्तिरिति निरस्तम्। व्यधिकरणयोः पूरवृष्ट्योर्देशतः कालतो वा साहचर्यस्य सम्बन्धस्य चाभावात् । नदीपूरस्य वृष्टिरूपसाध्याभाववदधोदेशवृत्तित्वाच्चेति ॥

उच्यते । यद्देशकालसम्बद्धस्य यस्य यद्देशकालसम्बद्धेन येन विनाऽनुपपत्तिस्तस्य तेन सा व्याप्तिः । अनुपपत्तेर्व्याप्तित्वं च– प्रमाणलक्षणे परिशेषोऽर्थापत्तिरनुमानमित्यविशेष इत्यर्थापत्तिरिवानुमानमप्यावश्यकानुपपत्त्यैव गमकमित्युक्तत्वात्; उपमानेपि न हि स्वसदृशेनादृशं क्वचिद्दृष्टमित्यनेन गवयनिष्ठगोसादृश्यस्य गोनिष्ठगवयसादृश्यं विनानुपपत्तेरेवोक्तत्वात् । पद्धतौ च निर्दोषोपपत्तिरनुमेति प्रमाणलक्षणस्थोपपत्तिशब्दो न पर्यायान्तरमात्रम् किं तु साध्ये सत्युपपद्यते अन्यथा तु नेत्युपपत्तिरिति भावेनोपपत्तिर्व्याप्यमिति व्याख्यातत्वात् । प्रमाणलक्षणटीकायामपि जीवनवत्त्वे सति गृहे असत्त्वरूपे व्याप्ये अनुपपद्यमानार्थप्रमितिरर्थापत्तिरित्यनुपपद्यमानपदयोगात् परिशेषादेरनुमानत्वानङ्गीकारे धूमोऽप्यनुपपत्त्या गमयन्नानुमानं स्यादिति चोक्तत्वात् । सुधायां च 'अनुमा युक्तिरेवोक्ते'त्यनुव्याख्यानस्थयुक्तिशब्दस्य युज्यते एवेति युक्तिरिति व्याख्यातत्वाच्च; भाष्यकाराद्यभिप्रेतमेव ॥

यत्तु विमतो गौर्गवयसदृशः गवयगतसादृश्यप्रतियोगित्वादिति प्रमाणलक्षणटीकायां हेतुसाध्ययोः सामानाधिकरण्यसंपादनं तत्परमतमाश्रित्य । अत एव तत्रैव इति प्रयोगसम्भवादित्युक्तम् । अत एव पद्धतौ च असौ गौरेतद्गवयसदृशः अस्य गवयस्य तद्गोसदृशत्वादिति वैयधिकरण्येनैव प्रयुक्तम् । अत एव सुधायां—

'रोहिण्युदय आसन्नः कृत्तिकाभ्युदितायत' इत्यनुव्याख्यानोक्ते व्यधिकरणप्रयोगे कालादिपक्षीकारेणैकाधिकरण्यमाशङ्क्यैवं प्रयोगविपरिणामप्रमाणं नेत्युक्तम् ॥

अनुपपत्तिश्चाघटनं प्रमाणविरोध इति यावत् । उक्तं हि प्रमाणलक्षणटीकायां अनुपपत्तिश्चासम्भव इति ॥

या तु– परेण व्याप्त्या गमकमनुमानम्, अनुपपत्त्या गमिकाऽर्थापत्तिरित्यनु-

मानार्थापत्त्योर्भेदे शङ्किते तं प्रति टीकाकारीया, केनचिद्विना कस्यचिदनुपपत्तिर्हि तयोर्व्याप्तिं विना नोपपद्यत इत्यनुपपत्तिव्याप्त्योर्भेदोक्तिः साऽनुपपत्तिनियामकोर्ध्वाधरीभावकार्यकारणभावाद्यभिप्राया । नियतसामानाधिकरण्यानौपाधिकसम्बन्धादिरूपपराभिमत व्याप्त्यभिप्राया वेति न टीकाविरोधः ॥

इयमेव च व्याप्तिः साध्येन विना साधनस्याभावोऽनुपपत्तिरिति भावेनाविनाभाव इति साहचर्यनियम इति चोच्यते । यस्यानुपपत्तिः स व्याप्तः । येन विनानुपपत्तिः स व्यापकः ॥

इयं च व्याप्तिः प्रसिद्धेषु धूमाद्यनुमानेषु अधोदेशे नदीपूराद्यनुमानेष्वर्थापत्त्यादिरूपानुमानेषु आत्माश्रयान्योन्याश्रयचक्रकानवस्थाव्याघतापादकेषु तर्केषु केवलव्यतिरेकिषु केवलान्वयिषु च सर्वत्रानुगता आवश्यकी च । अन्यथाऽप्रयोजकत्वापातात् । हेतुरस्तु साध्यं मास्त्वित्यत्येवाव्याप्तेः शङ्क्यमानत्वात् । न चात्माश्रयत्वादिकमापाद्यम् आपादकसमानाधिकरणत्वेन क्वचित्प्रमितम् । तथात्वेऽनिष्टत्वायोगात् । उक्तं च टीकाकारैः । न हि कुत्राप्यात्माश्रयादिकं प्रमाणसिद्धमिति ॥

ननु धूमस्यानुपपत्तिः किं वह्निसामान्यं विना किं वा पर्वतीयवह्निं विना । नाद्यः । तया पर्वतीयवह्न्यसिद्धेः । नान्त्यः । पर्वतीयवह्न्यसिद्धौ तेन विनानुपपत्तेर्दुर्ज्ञानत्वात् । सिद्धौ च तस्या एवानुमितिरूपफलत्वेन तत्कारणत्वायोगात् इति । उक्तं हि खण्डने– यतोऽन्यत्वं तत्सिद्धेरग्रे तदसिद्धेरिति इति चेत् । धूमस्य सामानाधिकरण्यमपि किं वह्निसामान्येन किं वा पर्वतीयवह्निनेति विकल्प्य तद्दूषणयोः साम्यात् ॥

ननु धूमसामान्यस्य वह्निसामान्येन सामानाधिकरण्यज्ञानं करणम् । वस्तुगत्या पर्वतीयस्य वह्नेर्वह्नित्वेन ज्ञानं फलम् । वह्नेः पर्वतीयत्वसिद्धिस्तु पक्षधर्मताबलादिति चेत्सममनुपपत्तावपि ॥

न चेयं व्यतिरेकव्याप्तिः । केवलान्वयिन्यपि साध्यं विनानुपपत्तेः सद्भावात् ।

वृष्टिरूपसाध्याभाववत्यधोदेशे पूररूपसाधनाभावस्याभावेन व्यतिरेकव्याप्त्यभावेऽपि पूरे वृष्टिं विनानुपपत्तिदर्शनात् । किं च वह्निं विनानुपपत्तिर्धूमगता । व्यतिरेकव्याप्तिश्च वह्न्यभावगतेति कथं तयोरभेदः । वह्न्यभावस्य धूमाभावेन व्याप्तिरपि धूमाभावं विनानुपपत्तिरेव । सा च वह्न्यभावेन धूमाभावे साध्ये व्याप्यगतत्वादन्वयव्याप्तित्वेनैवाङ्गम् । धूमेनैव वह्नौ साध्ये तु धूमानिष्टत्वान्न साक्षादङ्गम् । न च केवलान्वयिन्यव्याप्तिः । तत्र साध्याभावासत्त्वेनैव साध्याभावे सति साधनस्य योपपत्तिः तदभावरूपानुपपत्तेः सत्त्वात् । मन्मते अप्रामाणिकस्यापि निषेधप्रतियोगित्वात् ॥

तथा च रसस्य समानदेशकालेन रूपेण विनेव, पाकजरूपादेः समानदेशेन भिन्नकालेन पाकेन विनैव च, कृत्तिकोदयस्याभिन्नकालया भिन्नदेशया रोहिण्युदयासत्त्या विना, अधोदेशनदीपूरस्य भिन्नदेशकालोर्ध्वदेशवृष्ट्या विनानुपपत्तिरस्तीति, सामानाधिकरण्य इव वैयधिकरण्येऽप्युक्तरूपा व्याप्तिर्युक्ता । प्रत्युत नदीपूरादौ सामानाधिकरण्य एवोक्तरूपा व्याप्तिरयुक्ता । न ह्यूर्ध्वदेशगतो नदीपूरः ऊर्ध्वदेशगतां वृष्टिं विनानुपपन्नः । किं तु ततोऽप्यूर्ध्वदेशगताम् ॥

ननु साध्याभावेनैव सम्बद्धस्य नदीपूरस्य वृष्टिरूपसाध्येन कथं व्याप्तिरिति चेत् साध्याभावेन नियमेन सम्बद्धस्य द्रव्यत्वस्य संयोगरूपसाध्येन कथं व्याप्तिः । यदि तु तत्र फलबलेन व्याप्तिलक्षणे प्रतियोग्यसमानाधिकरणेति विशेषणाद्व्याप्तिसिद्धिः तर्ह्यत्रापि फलबलेनैव व्याप्तेर्लक्षणान्तरस्योक्तत्वात्तत्सिद्धिरिति समम् ॥

ननु वैयधिकरण्ये साध्यस्य देशनियमः कथमिति चेत् । सामानाधिकरण्येऽपि—धूमेन तदधोभाग एव वह्नेः, तुलोन्नमनेन भागान्तर एवावनमनस्य, व्याप्यवृत्तिना द्रव्यत्वेनाव्याप्यवृत्तेः संयोगस्याव्याप्यवृत्तिना संयोगेन व्याप्यवृत्तिद्रव्यत्वस्य, सिद्धिरिति कथं पक्ष एव प्रदेशनियमः । कथं च समानकालत्वेऽपि कादाचित्केन पतनेन स्थायिगुरुत्वस्य, स्थायिना शरीरत्वेन कादाचित्कनाशस्य च, सिद्धिरिति कालनियमः ॥

व्याप्तिस्वभावादिति चेत्समम् । यत्र यदा रसस्तत्र तदा रूपमिति समानदेशकालत्वेनेव, यत्र पाकजं रूपं तत्र पाक इति समानदेशत्वमात्रेणेव, यदा कृत्तिकोदयस्तदा रोहिण्युदयासत्तिरिति समानकालत्वमात्रेणेव च, यदा यत्र नदीपूरस्तत्पूर्वकाले तदूर्ध्वदेशे वृष्टिरिति भिन्नदेशकालत्वेनैव व्याप्तिग्रहात् ॥

ननु देशतः कालतश्च वैयधिकरण्ये कथं व्याप्तिग्रहः । यत्रेदं तत्रेदमिति वा यदैवं तदैवमिति वा देशतः कालतो वा सामानाधिकरण्येनैव व्याप्तेर्ग्राह्यत्वादिति चेन्न । यदीदं तर्हीदमित्येवानुपपत्तिरूपव्याप्तिग्रहस्य सर्वानुगतत्वात् ॥

अत्र च यद्देशकालसम्बद्धस्य हेतोरनुपपत्तिः तद्देशकाले हेतोरभाव एवासिद्धिः । न तु पक्षेऽभावः । एवं यद्देशकालसम्बद्धस्य हेतोरनुपपत्तिः तद्देशकालयोरन्यत्रापि भावो व्यभिचारः । न तु साध्याभाववति वृत्तिः । एवमुक्तयोर्देशकालयोरन्यत्रैव वर्तमानो विरुद्धः । न तु नियमेन साध्याभाववति वर्तमान इति न कश्चित्क्षुद्रोपद्रवः ॥

तस्माद्वैयधिकरण्येऽपि व्याप्तिरस्त्येव । तदुक्तं भगवत्पादैः । ''असत्यपि व्याप्तिरस्त्येवेति'' । सामानाधिकरण्ये असत्त्यप्यनुपपत्तिरूपा व्याप्तिरस्त्येवेत्यर्थः । अत एव व्यधिकरणासिद्धिर्न दोष इति वक्ष्यते ॥

## न्यायदीपाख्या व्याख्या

सत्तर्कसहिता वेदाः प्राहुर्यं पूर्णसद्गुणम् ।
धर्माराध्यं देवतेड्यं वन्दे तं कमलापतिम् ॥

पूर्वेण सङ्गतिं दर्शयन्नुत्तरार्थमाह— अथेति । सपरिकरं शब्द प्रमाणस्वरूपनिरूपणानन्तरमनुमानप्रमाणं सपरिकरम् अस्मिन्परिच्छेदे कथ्यते । किं कारणम् । तदनुग्राहकम्—हेतुगर्भमिदम् । शब्दप्रमाणानुग्राहकत्वादुच्यत इत्यर्थः । तदनन्तरम् कुतः । वेदरूपः शब्दः प्रमाणमित्युक्तत्वात् । प्रधानोक्त्यनन्तरमेवानुग्राहकोक्तेरवसरादित्यर्थः । यद्वा प्रमाणान्तरानुग्राहकमनुक्त्वा वेदानुग्राहकोक्तिः कुत इत्यतो वेदरूपः शब्दः प्रधानमित्युक्तत्वादिति । ''याथार्थ्यमेव मानत्वं तन्मुख्यं ज्ञानशब्दयोः'' इति युक्तिपादीयानुव्याख्याने

''याथार्थ्यमेव प्रामाण्यं तन्मुख्यं ज्ञानशब्दयोः'' इति ब्रह्मतर्के च । तद्याथार्थ्यं ज्ञाने केवलप्रमाणे वेदरूपप्रमाणे च मुख्यमित्यस्य तात्पर्यं— **प्रधानमित्युक्तत्वादिति** । वेदानुग्राहकत्वं च— वेदे आरोपितानि यानि अप्रामाण्यकारणानि अनृतव्याघातपुनरुक्त्यशक्यार्थाभिधायित्व गुरूपायबोधकत्वार्थबोधोपायशून्यत्वादीनि तत्सर्वनिरासेन प्रामाण्यस्थिरीकरणं, तथा वेदबोध्येऽर्थे आरोपितान्यथाकारशङ्कानिरासेन तद्बोध्यधर्मदेवब्रह्मस्वरूपस्थिरीकरणम् ॥

अनुमानसामान्यलक्षणं प्रमाणलक्षणे भगवत्पादोक्तमेवाह— **निर्दोषेति** । अनुमेत्यनुमानमुच्यते । निष्क्रान्ता दोषेभ्यः निर्दोषा सा च सा उपपत्तिश्च निर्दोषोपपत्तिः । उपपत्तिदोषाश्च स्वमते अनुमानदोषोक्तिवादे व्यक्ताः । अत्रोपपत्तिपदं अर्थवादोपपत्ती चेत्यादाविव हेत्वाभासविविक्तयुक्तिपरं चेत् निर्दोषेति व्यर्थमित्यत आह— **उपपत्तिर्व्याप्यमिति** ॥

ननु लक्षणटीकायामुपपत्तिर्लिङ्गमित्युक्तम् । अत्र तूच्यते व्याप्यमिति । तत्कथमित्यतः पर्यायत्वान्न दोष इति भावेनाह— **उक्तं हीति** । चतुर्णां शब्दानामुक्तेः कृत्यमाह— **अत्रेति** । **पूर्ताविति** । तावतैव निर्दोषपदसार्थक्यस्य लक्षणोक्तेर्वा सम्भवादिति भावः । 'अनुमा युक्तिरेवेति' युक्तिपादीयानुव्याख्याने, 'लिङ्गं हेतुरिति' मिथ्यात्वानुमानखण्डने चोक्तत्वादित्यर्थः ॥

ननु व्याप्यं नाम व्याप्तेः कर्म । व्याप्तिश्च साहचर्यनियम इति वाच्यम् । तथा च लक्षणटीकाविरोध एव । तत्रोपपत्तिर्लिङ्गमित्युक्त्वा साहचर्येणार्थगमकं लिङ्गमित्येवोक्तेरित्यतो नियमांशोऽभिप्रेत एव तत्फलस्य विशेषणान्तरलभ्यत्वात्तदनुक्तिरिति भावेन विरोधं निराह— **प्रमाणलक्षणटीकायां त्विति** । **साधारणेति** । साधारणानैकान्तिकहेत्वाभासादावित्यर्थः ॥

ननु व्याप्तेः कर्म व्याप्यमिति व्याप्यस्वरूपं व्याप्तिज्ञानाधीनज्ञानमिति का व्याप्तिरिति जिज्ञासायां पद्धत्युक्तलक्षणमाह— **अविनाभाव इति** । तत्परिष्कर्तुं व्याप्तिवादपूर्वपक्षे मण्याद्युक्तिदिशाऽऽक्षिपति— **नन्विति** । नञो व्यत्यासेनान्वयमुपेत्याद्यः कल्पः । यथाश्रुतान्वयमुपेत्य द्वितीयः । फलितार्थमाह— **साध्यसाहित्येनेति** । **केवलान्वयिनीति** । शब्दोऽभिधेयः ज्ञेयत्वात् गुणत्वात् इत्यादिकेवलान्वयिसाध्यकहेतावित्यर्थः । **साध्यादीति** । साध्यसाधनाभावेत्यर्थः ॥

सिद्धान्तिनो मते सर्वस्य व्यतिरेकित्वादभावाप्रसिद्धिर्नेत्यरुचेराह– **अस्येति** । साध्येन विनाऽभाव इत्यस्य साध्याभावे साधनाभाव इत्यर्थकतया अस्य व्यतिरेकव्याप्तित्वात् । सिद्धान्ते च व्यतिरेकवादे वक्ष्यमाणदिशाऽनुमानानङ्गत्वाच्चेत्यर्थः । त्वन्मते—सिद्धान्तिनो मते ॥

''अविनाभावो व्याप्तिः साहचर्यनियम इति यावदि''ति पद्धत्युक्तेराह— **साध्यसाहित्येति । आत्माश्रयात्**—ज्ञप्ताविति भावः ।

**अधोदेशनदीपूरोर्ध्वदेशवृष्ट्योरिति** । तयोरपि लिङ्गलिङ्गिभावदर्शनात् भिन्नदेशत्वाद्भिन्नकालत्वाच्चेति भावः । **एतेनेति** । भिन्नदेशकालव्याप्यव्यापकभावापन्नपूर्ववृष्टिस्थलीयव्याप्तावव्याप्तत्वेनेत्यर्थः । **साहचर्यनियम इति** । पूर्वमविनाभाव इत्यस्याभिप्रेतत्वमुपेत्य साहित्यनियमो दूषितोऽत्र तु पृथग्व्याप्तिलक्षणत्वेन साक्षादुक्तत्वमुपेत्य पुनरुपन्यास इति न पुनरुक्तिदोषः ॥

एतेनेत्युक्तं व्यनक्ति—**व्यधिकरणयोरिति** । समानदेशकालभिन्नदेश- कालसर्वव्याप्यनिष्ठव्याप्तिं निरूपयति–**यद्देशेति । येन विनेति** । केवलान्वयिन्यव्याप्तिस्तूद्धरिष्यत इति भावः । इयं च सर्वसाधारणीति स्वयमेवोपपादयिष्यति । अनुपपत्तिस्वरूपं चानुपपत्तिश्चासम्भव इत्यादिना स्वयमेव वक्ष्यति । **अनुपपत्तेर्व्याप्तित्वं चेति** । भाष्यकाराद्यभिप्रेतमेवेत्यन्वयः । अविशेषशब्दार्थं टीकोक्तरीत्याऽऽह— **अर्थापत्तिरिवेत्यादि । उपमानेऽपीति** । शबरोपमानस्यानुमानान्तर्भावोक्तिप्रस्तावेऽपीत्यर्थः ॥

पद्धतावुपपत्तिर्युक्तिर्लिङ्गं व्याप्यमिति शब्दाः पर्याया इत्युक्तेर्ग्रन्थान्तराविरोध एकोऽभिप्राय उक्तः । अभिप्रायान्तरमपि प्रकृतोपयोगायाह— **पद्धतौ चेति** । प्रमाणलक्षणाख्यग्रन्थगतस्य निर्दोषोपपत्तिरनुमेत्येतदेव पद्धतावुपन्यस्य व्याप्यमिति व्याख्यानात्प्रमाणलक्षणस्थेत्युक्तम् । एतच्च मूलाकारसम्मतमेतदिति ज्ञापनार्थम् । नन्वेवं शाबरोक्तप्रमाणान्तर्भावप्रस्तावे गौर्गवयसदृशी गवयस्य गोसदृशत्वादिति प्रयोगे वैयधिकरण्यमाशङ्क्य सामानाधिकरण्येन प्रयोगोक्तिः कथम् तया व्यधिकरणस्य गमकता नेति प्रतीतेरित्यत आह— **यत्त्विति । इत्यनुव्याख्यानेति** भक्तिपादीयानुव्याख्यानोक्तेः ॥

एवमनुपपत्तेर्व्याप्तित्वे संमतिमुक्त्वा तत्स्वरूपमिदानीमाह— **अनुपपत्तिश्चेति** । येन विना

यस्य सत्ता प्रमाणविरुद्धा सा तेन तस्य व्याप्तिरित्यर्थः । उपपत्तेश्च व्याप्त्यपेक्षा सर्वथाऽङ्गी-कार्येति प्रमाणलक्षणवाक्यटीकोक्तिविरोधं निराह— **या त्विति** । **पराभिमतेति** । न त्वनुपपत्तिरूपव्याप्त्यभिप्रायेत्यर्थः । नन्वेवमविनाभावो व्याप्तिः । साहचर्यनियम इति यावत्' इति पद्धत्युक्तिविरोध इत्यत आह— **इयमेवेति** ॥

नन्वनुपपत्तिर्व्याप्तिरिति पक्षे कथं व्याप्यव्यापकव्यवस्थेत्यत आह— **यस्येति** । अनौपाधिकसम्बन्धादिरूपव्याप्तिं हित्वैतदुपादाने को विशेष इत्यत आह— **इयं चेति** । **केवलान्वयिषु चेति** परीत्या । सिद्धान्ते सर्वस्य व्यतिरेकित्वात् । यद्वा देशकालरूप-केवलान्वयि साध्यकहेत्वपेक्षयैतदुक्तिः । एकसादृश्यसम्बन्धिधर्मसाध्यकहेत्वभिप्राया वैतदुक्तिः। आवश्यकी चेत्युक्तं व्यनक्ति— **अन्यथेति** । **अप्रयोजकतेति** । व्याप्यत्वेनाभिमतस्येति योज्यम् । इयमेव व्याप्तिर्युक्तेत्येतद्व्यतिरेकमुखेनाप्युपपादयति— **हेतुरिति** ॥

नन्वात्माश्रयादौ मण्याद्युक्तसामानाधिकरण्यघटितव्याप्तिरेवास्तु किमनयेत्यत आह— **न चेति** । **उक्तं चेति** । प्रमाणलक्षणटीकायामात्माश्रयान्योन्याश्रयेत्यादिवाक्यव्याख्यानावसरे । अस्यां व्याप्तौ बाधकमाशङ्कते— **नन्विति** । असिद्धौ अज्ञाने सतीत्यर्थः । एवं सिद्धा-वित्यपि । **तत्सिद्धेरग्रे तदसिद्धेरिति** । पर्वतीयवह्निसिद्धेः पूर्वं तद्वह्न्यसिद्धेः । न च सामान्यसिद्ध्या तत्सिद्धिः यतोऽन्यत्वं सामान्यविशेषयोरित्यर्थः । तन्मुखेन समाधिं वाचयितुं प्रतिबन्द्योत्तरमाह— **धूमस्येति** । यत्तु— अस्य व्यतिरेकव्याप्तित्वेन त्वन्मतेऽनु-मानानङ्गत्वाचेति तदाशङ्क्य निराह— **न चेयमिति** । सामानाधिकरण्यगर्भा व्यतिरेक-व्याप्तिर्न भवतीत्यर्थः ॥

ननु— समानाधिकरणतया हेतुसाध्यभावं गतेषु व्यतिरेकव्याप्तिरियं भविष्यतीति वादिनं प्रत्याह— **किं चेति** । नन्वस्त्वियं सर्वान्वय्यनुमानेषु वह्न्यभावादिना धूमाभावाद्यनुमान-स्थलेन्यैव व्याप्तिर्वाच्येति तदनुगतेयं न भवतीत्यत आह— **वह्न्यभावस्येति** । इयमेव धूमानुमानेऽप्यङ्गं कथं न व्यतिरेकव्याप्तिरित्यत आह— **धूमेनेति** । **न साक्षादिति** । किं तु व्यभिचारनिरासद्वारैवाङ्गमिति भावः । केवलान्वयिनि साध्याभावाप्रसिद्ध्याऽव्याप्तिरित्युक्तदोषं निराह— **न च केवलान्वयिनीति** । **अप्रामाणिकस्यापीति** । यथा चैतत्तथोपपादितं

न्यायामृते प्रथमपरिच्छेदे । सर्वत्रानुगतेति प्रागुक्तमुदाहरणनिष्ठतया व्यनक्ति— **तथा चेत्यादिना । सामानाधिकरण्य इवेति ।** यथा तत्र न्यायमते कथंचित्सामानाधिकरण्यं संपाद्य व्याप्तिरुपपाद्यते तथा क्लेशेन विनैव यथास्थितलिङ्गलिङ्गिनोर्वैयधिकरण्ये सत्यपीत्यर्थः ॥

ननु त्वन्मतेऽपि तत्र सामानाधिकरण्यमादायैव व्याप्तिरुच्यतामित्यत आह— **प्रत्युतेति ।** यथास्थितलिङ्गलिङ्गिनोर्व्यधिकरणयोर्व्याप्यव्यापकभावे बाधकमाशङ्क्य प्रतिबन्द्योत्तरमाह— **नन्वित्यादिना । साध्याभावेनेत्यादि ।** परमते संयोगस्याव्याप्यवृत्तित्वेन वृक्षः संयोगी द्रव्यत्वादित्यत्र द्रव्यत्वस्य साध्याभावसम्बन्धस्येत्युक्तम् । **फलेति ।** अनुमितिलक्षणफ़लबलेनेत्यर्थः । **प्रतियोगीति ।** प्रतियोग्यसमानाधिकरणसाध्यप्रतियोगिको योऽभावः तदसम्बद्धत्वे सति साध्यसामानाधिकरण्यं व्याप्तिरिति विशेषणादित्यर्थः । तथा च संयोगाभावस्य प्रतियोगिसामानाधिकरण्यान्न दोष इति भावः । व्यधिकरणयोर्लिङ्गलिङ्गिभावे बाधकान्तरमाशङ्क्य प्रतिबन्द्या निराह— **नन्विति ।** सामानाधिकरण्येऽपि पक्ष एव प्रदेशनियम इत्यन्वयः । कुत इत्यतोऽन्यत्रान्यथादर्शनादिति भावेनाह— **धूमेनेत्यादिना ।** वह्नेरित्यादिषष्ठ्यन्तानां सिद्धिरितीत्यनेनान्वयः । इतिशब्दो हेतौ । अत एव पद्धतौ तुलोन्नमनादीनामनेकेषामपि लिङ्गलिङ्गिभावो दर्शितः । 'व्याप्तिप्रकारमपेक्ष्य लिङ्गस्य लिङ्गिज्ञानजनकत्वनियमादि'ति पद्धत्युक्तदिशा परेण समाधानं वाचयित्वा सममित्याह— **व्याप्तीति ।** व्याप्तिस्वभावादित्युक्तं व्यनक्ति— **यत्र यदेति ।** व्याप्तिग्रहप्रकारानुपपत्तिमाशङ्क्य समाधत्ते— **नन्वित्यादिना ॥**

ननु वैयधिकरण्येऽपि व्याप्यव्यापकभावे हेतुतदाभासव्यवस्था न स्यादित्यत आह— **अत्र चेति ।** भिन्नदेशकालयोरपि व्याप्यव्यापकभावपक्ष इत्यर्थः । **न तु पक्ष इति ।** येन नदीपूरादिरसिद्धः स्यादिति भावः । **नन्विति ।** येन नदीपूरादिर्व्यभिचारी स्यादिति ध्येयम् । **तद्देशकालयोरन्यत्रेति ।** सम्बन्धसामान्ये षष्ठी । ताभ्यामन्यत्रेत्यर्थः । एवमग्रेऽपि । **एवमिति** समुच्चये । उक्तयोर्यद्देशे यत्कालेऽनुपपत्तिर्हेतोः साध्येन विना तयोरन्यत्र ताभ्यामन्यत्रेत्यर्थः । **तदुक्तमिति ।** प्रमाणलक्षणे । प्रकृतोपयोगाय तस्यार्थमाह— **सामानाधिकरण्य इति ॥**

इति स्वमते व्याप्तिनिरूपणम् ॥ १ ॥

## अथ परोक्तवक्रव्याप्तिलक्षणभङ्गः ॥ २ ॥

एतेन–

मण्युक्तानि–अव्यभिचरितः सम्बन्ध इत्यस्य विवरणरूपाणि तत्राप्यत्यन्ताभावगर्भाणि तत्रापि धूमजातीयस्य वह्निजातीयेन व्याप्तिरिति मताश्रितानि प्रतियोग्यसमानाधिकरणयत्समानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकानवच्छिन्नं यत्तेन समं सामानाधिकरण्यं व्याप्तिरित्यादीनि, तथा अत्यन्ताभावगर्भेष्वेव समानाधिकरणयोरेव धूमाग्निव्यक्तिविशेषयोर्व्याप्तिरिति मताश्रितानि प्रतियोग्यसमानाधिकरणयत्समानाधिकरणात्यन्ताभावप्रतियोगि यन्न भवति तेन समं सामानाधिकरण्यं व्याप्तिरित्यादीनि, तथा प्रतियोग्यसमानाधिकरणेति विशेषणादानाल्लघून्यन्योन्याभावगर्भाणि यत्सनाधिकरणान्योन्याभावप्रतियोगितावच्छेदकं यन्न भवति तेन समं तस्य सामानाधिकरण्यं व्याप्तिरित्यादीनि, तथा यत्समानाधिकरणान्योन्याभावप्रतियोगि यद्वन्न भवति तेन समं तस्य सामानाधिकरण्यं व्याप्तिरित्यादीनि ।

अनौपाधिकसम्बन्ध इत्यस्य विवरणरूपाणि तत्रापि साध्यव्यापकेषु साधनाव्यापकत्वनिषेधपर्यवसितानि यावन्तः साध्यसमानाधिकरणात्यन्ताभावाप्रतियोगिनः तत्प्रतियोगिकात्यन्ताभावासामानाधिकरण्यं व्याप्तिरित्यादीनि, तथा साधनाव्यापकेषु साध्यव्यापकत्वनिषेधपर्यवसितानि यावन्तः साधनसमानाधिकरणात्यन्ताभावप्रतियोगिनः तत्प्रतियोगिकात्यन्ताभावसमानाधिकरणसाध्यसामानाधिकरण्यं व्याप्तिरित्यादीनि ।

तथा स्वाभाविकसम्बन्धो व्याप्तिरित्यस्य विवरणरूपाणि यत्सामानाधिकरण्यावच्छेदकरूपवत्त्वं यस्य तस्य सा व्याप्तिरित्यादीनि च; साध्यसाधनसामानाधिकरण्यशिरस्कानि वक्राणि व्याप्तिलक्षणानि— निरस्तानि ॥

उक्तासु वक्ष्यमाणासु च सकललोकसिद्धासु व्यधिकरणसाध्यसाधनव्याप्तिषु आत्माश्रयान्योन्याश्रयचक्रकाश्रयानवस्थाव्याघाताद्यापादकतर्काङ्गभूतासु सामानाधि-

करण्यरहितापाद्यापादकव्याप्तिषु व्यतिरेकव्याप्तिषु चाव्याप्तेः । त्वयाऽपि व्याप्तित्वेनास्वीकृते नीलधूमस्य वह्निसामानाधिकरण्ये अतिव्याप्तेश्च । न हि नीलधूमवति वह्न्यत्यन्ताभावः ॥

किं च महानसीयवह्नेः पर्वतीयधूमसमानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकेन महानसीयवह्नित्वेनावच्छिन्नत्वादसम्भवः । प्रतियोगितानवच्छेदकावच्छिन्नेति नञ्व्यत्यासे च धूमरूपसाध्यस्यापि वह्निसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकेन प्रमेयत्वेनावच्छिन्नत्वात् तत्समानाधिकरणवह्निरपि धूमव्याप्यः स्यात् ॥

किञ्च यस्य यदत्यन्ताभावासमानाधिकरणत्वे सति येन सामानाधिकरण्यं तेन तस्य सा व्याप्तिरित्येवास्तु । लाघवात् । न च केवलान्वयिनि साध्यात्यन्ताभावस्याप्रसिद्ध्याऽव्याप्तिः । अत्यन्ताभावस्याभावादेव तत्सामानाधिकरण्याभावस्य शुक्तिरूप्यतादात्म्याभावस्येव सुतरां सिद्धेः । उक्तं चैतद्योग्यताप्रस्तावे ॥

किञ्चात्राधिकरणं देश एव वा काल एव वा उभयं वा उभयानुगतमधिकरणसामान्यं वा । नाद्यः । कालिक्यां गोत्वाश्वत्वव्याप्तावव्याप्तेः । अस्ति हि तयोरपि यदा गोत्वं तदाऽश्वत्वमिति व्याप्तिः । न द्वितीयः । दैशिक्यां पाकपाकजरूपादिव्याप्तावव्याप्तेः । अस्ति हि तयोरपि यत्र पाकजं रूपं तत्र पाक इति व्याप्तिः । न तृतीयः । अस्य रूपरसादिव्याप्तितोऽन्यत्र सर्वत्राव्याप्तेः । न चतुर्थः । गोत्वरूपहेतुं प्रति देशरूपाधिकरणे गव्यश्वत्वाभावेन तद्व्याप्तावव्याप्तेः । दैशिक्यां व्याप्तौ देशोऽधिकरणं कालिक्यां काल इति चेत् न । अननुगमात् । व्याप्तेरिदानीमेव निरुच्यमानत्वेनात्माश्रयाच्च । कृत्तिकोदयरोहिण्युदयासत्त्योरपि कालतः सामानाधिकरण्यसत्त्वेन तत्र वैयधिकरण्योक्त्ययोगाच्च । मदुक्तरीत्याऽनुगमसम्भवाच्च ॥

किञ्च त्वन्मतेऽपि नित्यद्रव्याणां निरधिकरणत्वात्तेषां यदाऽऽकाशः तदा नित्यद्रव्यमिति व्याप्तिर्न स्यात् ॥

ननु काल आकाशादेरधिकरणं आकाशः सदाऽस्तीत्यबाधितप्रतीतेरिरिति चेत् । तर्हि गगनात्यन्ताभावः केवलान्वयी न स्यात् । किं च सर्वत्राकाश इत्यपि प्रतीतेर्देशोऽप्याकाशाधिकरणं स्यात् ॥

ननु स्वरूपसम्बन्धेनाकाशः सदा सर्वत्रास्ति समवायवृत्त्या तु नास्तीति तया वृत्त्या रूपादेः प्रमेयत्वादेश्चात्यन्ताभावोऽपि केवलान्वयी स्यात् । गगनात्यन्ताभावोऽपि स्वरूपसम्बन्धेनैव सर्वत्रास्ति न तु संयोगादिवृत्त्येति गगनात्यन्ताभावात्यन्ताभावरूपं गगनमपि केवलान्वयि स्यात् ॥

अपि च प्रतियोग्यसमानाधिकरणेति विशेषणं व्यर्थम् । संयोगतदत्यन्ताभावयोर्भिन्नावयववृत्तित्वस्यान्यत्रोक्तत्वात् ॥

किञ्च प्रतियोगित्वस्य त्वन्मते स्वरूपसम्बन्धरूपत्वात्तस्य च व्याप्तिरूपनियमगर्भितविशिष्टप्रतीतिजनकत्वगर्भितत्वादात्माश्रयः ॥

अपि चैवं समानाधिकरणसाध्यसाधनव्यक्तिविशेषयोरेव व्याप्तिरिति मते पृथवीत्वस्य गन्धं प्रति व्याप्यत्वं न स्यात् । सर्वस्यापि गन्धस्य प्रत्येकं पृथिवीत्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वात् । न हि पृथिवीत्वमिवैकैव गन्धव्यक्तिः सर्वपृथिवीनिष्ठा ॥

अपि च गोत्वस्य गोव्यक्तिं प्रति कालिकी व्याप्तिः स्यात् । गोत्ववति प्रलयकाले गोव्यक्तिध्वंसस्य सत्त्वेऽपि गोव्यक्त्यत्यन्ताभावाभावात् । एवं पृथिवीत्वस्य गन्धेन सह कालिकी व्याप्तिः स्यात् । गन्धोत्पत्तेः प्रागगन्धाभावस्य सत्त्वेऽपि गन्धात्यन्ताभावाभावात् ।

न चात्यन्ताभावपदेन विरोध्यभावमात्रं विवक्षितम्, ध्वंसप्रागभावौ च कालतः प्रतियोगिविरुद्धाविति वाच्यम् । तथात्वे प्रतियोग्यसमानाधिकरणपदवैयर्थ्यात् । न च गोव्यक्तेः क्वचिदत्यन्ताभावस्तावदस्ति । न च सर्वाधारे कालेऽप्यस्तीति वाच्यम् ।

तथात्वे हि गोत्वस्याश्वत्वं प्रत्यपि कालिकी व्याप्तिर्न स्यात् । क्वचिद्देशे सतोऽश्वत्वाभावस्यापि काले सत्त्वात् ॥

किञ्च धूमोऽपि वह्निव्याप्यो न स्यात् । वह्नेः समवायवृत्त्या धूमसमानाधिकरणात्यन्ताभावप्रतियोगित्वात् ॥

न च साध्यस्य व्याप्तिशरीरान्तर्गतया वृत्त्या साधनसमानाधिकरणात्यन्ताभावाप्रतियोगित्वं विवक्षितम्, धूमाग्न्योश्च संयोगवृत्त्यैव व्याप्तिरिति वाच्यम् । व्याप्तेरिदानीमेव निरुच्यमानत्वेनात्माश्रयात् ॥

न च समवायवृत्त्या वह्न्यत्यन्ताभावस्य संयोगवृत्त्या वह्निसमानाधिकरणतया प्रतियोगिव्यधिकरणपदेनैव तन्निरास इति वाच्यम् । येन हि सम्बन्धेन यत्र हि प्रतियोगिनो भावः तेनैव सम्बन्धेन तत्र प्रतियोगिनोऽवृत्तिरेव हि प्रतियोगिवैय्यधिकरण्यम् । अन्यथा काले सर्वाभावानां प्रतियोगिसमानाधिकरणतया प्रतियोगिव्यधिकरणासिद्धेः ॥

किंच प्रतियोगिव्यधिकरणपदेन यत्किञ्चित्प्रतियोगिव्यधिकरणत्वं विवक्षितम् यावत्प्रतियोगिव्यधिकरणत्वम् । नाद्यः । अयं संयोगविशेषाभाववान् द्रव्यत्वादिति सदनुमानेऽव्याप्तेः । साध्याभावरूपस्य संयोगस्य स्वप्रतियोगिभूतसंयोगसामान्याभावव्यधिकरणत्वात् । नान्त्यः । अयं संयोगसामान्याभाववान् द्रव्यत्वादित्यसदनुमानेऽतिव्याप्तेः । साध्याभावरूपस्य संयोगस्य संयोगविशेषाभावरूपप्रतियोगिसामानाधिकरण्येन यावत्प्रतियोगिव्यधिकरणत्वाभावात् ॥

यच्चोक्तमन्योन्याभावगर्भलक्षणेषु प्रतियोग्यसमानाधिकरणेति विशेषणत्यागाल्लाघवमिति । तन्न । संयोगात्यन्ताभावस्याव्याप्यवृत्तित्वेन संयुक्तान्योन्याभावस्यापि तत्त्वावश्यं भावात् । मूले कपिसंयोगो नेतिवत् मूले वृक्षः कपिसंयुक्तो नेत्यबाधितप्रतीतेः । न चेयं धीः संयोगाभावविषया । घटः पटो नेतिवत्तादात्म्यनिषेध-

